तव शोकेनापि 'नैव दंशान्' इत्यादिमदुक्त्या श्रुतेन। तदा मम पुरस्तादभिपीडिता। अदीनभाषिणा मया। शिवाभिः इष्टाभिः वाग्भिः अभिप्रसादिता

अरिघ्नं सिंहसङ्काशं क्षिप्रं द्रक्ष्यसि राघवम्। लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितम् ॥ २५ ॥ नखदंष्ट्रायुधान् वीरान् सिंहशार्दूलविक्रमान्। वानरान् वारणेन्द्राभान् क्षिप्रं द्रक्ष्यसि सङ्गतान् ॥२६॥ शैलाम्बुदनिकाशानां लङ्का मलयसानुषु। नर्दतां कपिमुख्यानामचिराच्छ्रोष्यसि स्वनम् ॥ २७ ॥ निवृत्तवनवासं च त्वया सार्धमरिन्दमम्। अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् ॥ २८ ॥ ततो मया वाग्भिरदीनभाषिणा शिवाभिरिष्टाभिरभिप्रसा दिता। जगाम शान्तिं मम मैथिलात्मजा तवापि शोकेन तदाऽभिपीडिता ॥ २९ ॥ इत्यार्षे श्रीरामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशत्सहस्रिकायां संहितायां श्रीमत्सुन्दरकाण्डे अष्टषष्टितमः सर्गः ॥६८॥ सुन्दरकाण्डः समाप्तः ॥

शान्तिं दुःखनिवृत्तिं जगाम॥२९॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे शृङ्गारतिलकाख्याने सुन्दरकाण्डव्याख्याने अष्टषष्टितमः सर्गः ॥६८॥

इत्थं कौशिकवंशमौक्तिकमणिर्गोविन्दराजाभिधो वात्स्यश्रीशठकोपदेशिकपदद्वन्द्वैकसेवारतः।
पूर्वाचार्यकृता विलोक्य विविधा व्याख्या मुहुर्जानकीकान्तस्याप्रतिमाज्ञयैव तिलकं सौन्दर्यकाण्डे व्यधात् ॥ १ ॥

तत इति। तव शोकेनापि 'नैव दंशान्' इत्यादिपूर्वमुक्तया मदुक्त्या श्रुतेन त्वच्छोकेनापि मम पुरस्तदाऽभिपीडिता। अदीनभाषिणा मया शिवाभिरिष्टाभिः वाग्भिरभिप्रसादिता शान्तिं दुःखनिवृत्तिं जगामेति योजना ॥ २९ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीनारायणतीर्थशिष्यश्रीमहेश्वरतीर्थविरचितायां श्रीरामायणतत्त्वदीपिकाख्यायां सुन्दरकाण्डव्याख्यायाम् अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

महेशतीर्थरचिता रामपादसमर्पिता। व्याख्या सुन्दरकाण्डस्य समाप्ता तत्त्वदीपिका ॥

श्रीमत्सुन्दरकाण्डपठनश्रवणयोः फलम्। ब्रह्माण्डपुराणे सप्तचत्वारिंशदुत्तरशततमे अध्याये—

काण्डस्य सुन्दराख्यस्य श्रवणात्पठनादपि। मां प्राप्नुयाज्जगद्धेतुं नात्र सन्देह इष्यते ॥



## ॥ इति श्रीमद्वाल्मीकिरामायणे सुन्दरकाण्डम् ॥

श्रीभूषणादिव्याख्याचतुष्टयालंकृतं मुनिभावप्रकाशिका–तिलक-सत्यतीर्थीयादिव्याख्योद्धृतटिप्पणीसंवलितञ्च ।

